मधुमत्तमा ॥ कर्णाभ्यां भूरि विश्रुवम् ॥ ब्रह्मणः कोशोऽसि मेधया पिहितः ॥ श्रुतं मे गोपाय ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ३ ॥

ॐ अहं वृक्षस्य रेरिव ॥ कीर्तिः पृष्ठं गिरेरिव ॥ ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि ॥ द्रविणँ सवर्चसम् ॥ सुमेधा अमृतोक्षितः ॥ इति त्रिशङ्कोर्वेदाऽनुवचनम् ॥ ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ४ ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ५ ॥

ओमाप्यायन्तु ममाऽङ्गानि वाक् प्राऽणश्चक्षुश्श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराक-

रणं मे अस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ६ ॥

ॐ वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविराविर्म एधि वेदस्य म आणीस्थश्श्रुतं मे प्रहासीरनेनाऽधीतेनाऽहोरात्रात्सन्दधाम्यृतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु ॥ अवतु माम् ॥ अवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ७ ॥

ॐ भद्रं नो अपिवातय मनः ॥ ॐ शान्तिश्शान्तिश्शान्तिः॥ ८ ॥

ॐ भद्रं कर्णेभिश्शृणुयाम देवा भद्रं पश्येमाऽक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवास्स्वस्ति नः पूषा

विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ९ ॥

ॐ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥ तँ हो देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ १० ॥

( ॐ नमो ब्रह्माऽऽदिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो महद्भ्यो नमो गुरुभ्यः ) ॥ सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाऽहमस्मि ॥ १ ॥ ॐ नाराऽयणं पद्मभवं वसिष्ठँ शक्तिं च तत्पुत्रपराशरं च । व्यासँ शुकं गौडपदं महान्तं गोविन्दयोगींद्रमथाऽस्य शिष्यम् ॥ २ ॥ श्रीशङ्कराऽऽचार्यमथाऽस्य पद्मपादं च हस्ताऽऽमलकं च शिष्यम् ॥ तं त्रोटकं वार्तिककारमन्यानस्मद्गुरून्तसन्ततमानतोऽस्मि ॥ ३ ॥ श्रुतिस्मृति-

पुराणानामालयं करुणाऽऽलयम् ॥ नमामि भगवत्पादँ शङ्करं लोकशङ्करम् ॥४॥ शङ्करं शङ्कराऽऽचार्यं केशवं बादराऽयणम् ॥ सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनःपुनः ॥ ५ ॥ ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ॥ व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥ ६ ॥

॥ (अनाध्यायमङ्गलपाठः) ॥ अशुभानि निराचष्टे तनोति शुभसन्ततिम् ॥ स्मृतिमात्रेण यत्पुँसां ब्रह्म तन्मङ्गलं परम् ॥ १ ॥ अतिकल्याणरूपत्वान्नित्यकल्याणसंश्रयात् ॥ स्मर्तॄणां वरदत्वाच्च ब्रह्म तन्मङ्गलं विदुः ॥ २ ॥ ओङ्कारश्चाऽथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ ३ ॥ इति दश शान्तयस्समाप्ताः ॥छ॥ हरिः ओम् ॥छ॥ तत्सत् ॥छ॥ परब्रह्मार्पणमस्तु ॥छ॥

## ॥ विज्ञापना ॥

समलंकुर्वन्तु दृष्ट्यावधारयन्तु च कर्णामृतं मदीयं वचो निखिलनिगमसाररसनिरीक्षणपरीक्षणकुशलाः, यदेतद्धरातले संसारपथप्रवृत्तानां पाथेयमिवाधर्मकण्टकादिवर्जने दिव्यचक्षुरिव धर्मराजसदनोपदेशने वेत्रवतीकुलमिव तत्रभवता भगवताश्वलायनाचार्येण प्रणीतमृगादिचतुरुदधिमन्थनसमुद्धृतं गृह्यसूत्रं गार्ग्यनारायणीयव्याख्यया संकलितं परिशिष्टसमेतं कुमारिलभट्टविरचितसटिप्पणकारिकासमेतं कीलकाक्षैररङ्कयित्वा प्रसिद्धिं नीतमिति। एतस्य हि चत्वारोऽध्यायाः। तत्र प्रथमे पाकयज्ञप्रकारादिमधुपर्कान्ता विषयाः। द्वितीये श्रवणाकर्मकालनियमादिगृहप्रपदनादिकर्मान्ताः। तृतीये पञ्चयज्ञादियुद्ध्यमानराजपुरोहितजपमन्त्रान्ताः। चतुर्थे व्याधिपीडिताहिताग्निकर्तव्याद्याचारनमस्कारान्ताः सन्ति। तेच विशेषविस्तरेणास्मिन्नेव ग्रन्थे वाचकानां सौलभ्यार्थं विषयानुक्रमणिकया संगृहीताः। अयं ग्रन्थोऽन्यत्र मुद्रितोऽपि स्थलविशेषे क्वचित्पाठरहितोऽस्ति। अतः बहुभिर्विद्वद्भिः सुसंस्कार्य मुद्रणार्थं बोधितेन मया मुद्रण आदरोऽकारि। एतस्य संस्करणं च गाडगीलोपनामकैः केशवात्मजदिनकरशास्त्रिभिः महता प्रयासेन प्रेम्णा च कृतम्। एतस्य मूल्यं चातीवाल्पं रूपकद्वयं ग्राह्यतया स्थापितम्। तत् सर्वैर्जनैरादरणीयमेतत्पुस्तकमिति संप्रार्थयेऽहम्।

(भवदीयः) तुकाराम तात्या.

## प्रसिद्धिलेखः

डाकव्ययसह मूल्यम्.

| | | रू० आ० |
|---|---|---|
| १. | ऋग्वेदसंहिताभाष्यं—श्रीमद्विद्यारण्यमुनिविरचितम् षोडसोपाव्हैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशोधितम् ... ... ... ... ... ... ... ... ... ... ... ... ... ... | ५०—० |
| २. | ऋग्वेदसंहिता, परिशिष्टं सर्वानुक्रमसहितं च ... ... ... ... ... ... ... ... | ४—८ |
| ३. | शुक्लयजुर्वेदीयवाजसनेयसंहितापदानि—षोडसोपाव्हैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशोधितानि. | २—१२ |
| ४. | ऐतरेयब्राह्मणं—षोडसोपाव्हैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशोधितम् ... ... ... ... | २—१२ |
| ५. | शिक्षा, ज्योतिषं, छंदः, निघंटः, अष्टाध्यायी, तथा निरुक्तादि वेदस्य षडङ्गानि ... ... | २—२ |
| ६. | हठयोगप्रदीपिका सटीका—हूणभाषांतरसहिता ... ... ... ... ... ... ... ... ... | १—८ |
| ७. | महिम्नस्तोत्रम् ,, ... ... ... ... ... ... ... ... ... | ०—२ |
| ८. | कृष्णयजुर्वेदसंहिता—महामहोपाध्यायषोडसोपाख्यराजारामशास्त्रिभिः संशोधिता ... ... ... | ३—८ |
| ९. | घेरण्डसंहिता—इंग्लिशभाषान्तरसहिता ... ... ... ... ... ... ... ... ... ... | ०—१२ |
| १०. | योगसारसंग्रहः ... ... ... ... ... ... ... ... ... ... ... ... ... ... | ०—१० |
| ११. | सांख्यतत्त्वकौमुदी—इंग्लिशभाषान्तरसहिता ... ... ... ... ... ... ... ... | मुद्राप्यते. |
| १२. | भगवद्गीता—इंग्लिशभाषान्तरसहिता ... ... ... ... ... ... ... ... ... ... .. | मुद्राप्यते. |

☞ एतानि पुस्तकानि मुम्बापुर्यां यमबाणमिते ( ५२ ) गृहे कष्टमहींसरस्तासंज्ञे तुकारामतात्यातः प्राप्नुवन्ति ।

इदं पुस्तकं तुकारामतात्याभिख्येन तत्त्वविवेचकग्रंथप्रसारकसमित्यै
'तत्त्वविवेचक' मुद्रणयन्त्रालये मुद्रयित्वा प्रसिद्धिं नीतं
मोहमय्याम्.

तच्च

मोहमय्यां यमबाणमिते ( ५२ ) गृहे कष्टमहौस रस्तासंज्ञे
तुकारामतात्यातः क्रय्यपुस्तकालये
लभ्येत 'तत्त्वविवेचक' मुद्रणालये च.
शकाब्दाः १८१७.
मूल्यं रूपकसप्तकम् ( ७ ).

॥ इति दशोपनिषच्छान्तिसमेता अष्टोत्तर-
शतमुपनिषदः समाप्ताः ॥